न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।
प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ ७ ॥
स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम्।
कृतकेनाऽमृतस्तस्य कथं स्थास्यति निश्चलः॥८॥
सांसिद्धिकी स्वाभाविकी सहजा अकृता च या।

उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोध-रूपापितानुमोदनप्रदर्शनार्थः ॥ ७ ॥ ८ ॥

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति काऽसावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति। तथैवं सो। तथा

परिणामिब्रह्मवादे यैद्ब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुज्ञातमेवेति मत्वाऽऽह। न भवतीति। अमृतं हि ब्रह्म न तद्रूपे स्थिते मर्त्यं भवितुमर्हति। स्थितरूपविरोधात्। न च मर्त्यं कार्यं स्वरूपे स्थिते प्रलयावस्थायाममृतं ब्रह्म संपद्यते। नष्टेऽपि स्वरूपे तस्यैवा-भावान्नान्यथात्वमित्यभिप्रेत्याऽऽह। प्रकृतेरिति। किंच यस्य परिणामवादिनः स्वभावेनामृतः सन्परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्या गच्छति तस्य कृतकेन समुच्चयानुष्ठानेनाऽमृतो जीवो मुक्तो वक्तव्यः। स च कथं निश्चलः स्थातुं पारयति। यत्कृतकं तदनित्यमिति न्यायविरोधादित्याह। स्वभावेनेति। पुनरुक्ति-माशङ्क्य प्रत्यादिशति। उक्तार्थानामिति ॥ ७ ॥ ८ ॥

प्रकृतेरन्यथाभावो न कथंचिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति। सांसिद्धिकी-ति। श्लोकाक्षराणि व्याकुर्वन्प्रकृतेरन्यथात्वाभावे हेतुमाह। यस्मादिति। तस्माद-जामृतस्वभावा प्रकृतिर्न विपर्येतीति किमु वक्तव्यमिति योजना। कैमुतिकन्यायद्योत-नार्थोऽपिशब्दः। विवक्षितं हेतुं स्फुटयितुं प्रश्नपूर्वकं विभजते। कासावित्यादिना।

---

१ झ. यथा। २ च. °जाप्याक्ष°। झ. °आ कृतका यथा। ३ ख. च. ङ. °नुपपत्त्यनुमो°। छ. °नुपपत्त्याऽनुमो°। ४ घ. च. °द्धिस्त°। ५ च. °व स्वा°। ञ. ज. °व या स्वा°। ६ घ. °सा स्वा°। ७ ग. घ. ङ छ. °यद्ब्रह्म°। ८ ञ. °कार्यस्व°। ९ ख. °र्ये कार्यस्व°। १० क. °रूपास्थ°। ११ क. स्थितं। १२ घ. धर्मवादिनो। १३ क. कृतके। १४ ञ. °च्चयोनु°। १५ ग. छ. झ. जीवो। १६ घ. °स्वभाव°।

प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥९॥
जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।
जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥१०॥

स्वाभाविकी द्रव्यस्वभावत एव यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा सोऽपि न कालान्तरे व्यभिचरति देशान्तरे च तथा सहजाऽऽत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्यापि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा । अन्याऽपि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरितिविज्ञेया । लोके मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताऽजस्वभावेषु परमार्थवस्तुष्वमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यर्थभिप्रायः ॥ ९ ॥

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते

साङ्ख्योगमनुष्ठाय परिसमापनं संसिद्धिः । सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसंपन्नानां या काचित्स्वभावं न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति शेषः । प्रासङ्गिकं प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथात्वाभावे प्रागुक्ते स्वसिद्धान्ते यत्फलति तदिदानीं किं पुनर्न्यायेन कथयति । मिथ्येति ॥ ९ ॥

प्रासङ्गिकीमेवं जीवानां प्रकृतिं दर्शयितुं प्रक्रमते । जरेति । आत्मानो हि सर्वविक्रियारहिताः स्वभावतो भवन्तीत्यर्थः । तेषाममुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याऽऽह । जरामरणमिति । सर्वविक्रियाशून्ये स्वात्मनि विक्रियाकल्पनायां तद्वासनया स्वभावहानिः स्यादित्यर्थः । श्लोकाक्षराणि व्याकर्तुमाकाङ्क्षां दर्शयति । किंविषयेति । आश्रयविषयो विषयशब्दः । अप्रकृतं प्रकृतेराश्रयनिरूपणमित्याशङ्क्याऽऽह । यस्या इति ।

१ झ. सा । २ ज. °सा न° । ३ झ. °जा सा आत्म° । ४ झ. °पि का° । ५ घ. °पि का° । ६ च. छ. °तिर्ज्ञेया । घ. ७ °क्षणप्र° । ८ °तीति भावः ॥ ९ ॥ ख. घ. ङ. ज. °तीति ॥ ९ ॥ ९ क. घ. °भावाम अ° । १० क. °क्ते सि° । ११ ज. °मेवंजी° । १२ ग. °तिं प्रद° । १३ ख. हि वि° । १४ घ. ङ. °मक्ते प्र° । ञ. °मक्तः प्र° । १५ ग. झ. °सनायाः ।

कारणं यस्य वै कार्यं कारणं तस्य जायते।
जायमानं कथमजं भिन्नं नित्यं कथं च तत्॥११॥

कल्पनायां वा को दोष इत्याह। जरामरणादि निर्मुक्ताः। जरामरणादिसर्वविक्रियावर्जिता इत्यर्थः। के सर्वे धर्माः सर्वे आत्मान इत्येतत्स्वभावतः प्रकृतितः। एवंस्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः। तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः॥ १०॥

कथं सज्जातिवादिभिः सांख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः। कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यं कारणमेव कार्याकारेण परिणमते यस्य वादिन इत्यर्थः। तस्याऽजमेव सत्प्रधानादि कारणं महदादि कार्यरूपेण जायत इत्यर्थः। महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैर्विप्रतिषिद्धं चेदं जायतेऽजं चेति। नित्यं च तैरुच्यते। प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवेदित्य-

प्रश्नान्तरं प्रकरोति। कल्पनायामिति। तत्र पूर्वार्धमुत्तरत्वेन व्याकरोति। आहेत्यादिना। उत्तरार्धं विभजते। एवंस्वभावा इति॥ १०॥

प्रासङ्गिकं परित्यज्य सांख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्यनुज्ञातमनुभाषते। कारणमिति। कारणस्य जायमानत्वे का हानिरित्याशङ्क्याऽऽह। जायमानमिति। सावयवत्वाच्च प्रधानस्य नित्यत्वानुपपत्तिरित्याह। भिन्नमिति। श्लोकस्य तात्पर्यमाह। कथमिति। तत्र प्रथमपादाक्षराणि योजयति। कारणमित्यादिना। तदेव स्पष्टयति। कारणमेवेति। द्वितीयपादं विभजते। तस्येति। प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिशब्देनाहंकारादिग्रहणम्। तृतीयपादं व्याकरोति। महदादीति। विप्रतिषेधं विशदयति। जायत इति। चतुर्थपादार्थमाह। नित्यं चेति। विमतमनित्यं सावयवत्वाद्घटादिवदित्यभिप्रेत्य दृष्टा-

१ ज. झ. °या को°। २ छ. °यारहिता। ३ च. के ते स°। ४ क. आत्मान। ५ च. इत्यत आह। ६ च. °रूपं जा°। ७ च. घ. ङ. °ते विा°। ८ ख. °र क°। ९ ग. छ. झ. °नायां वेति। १० क. सावयवत्वा°।

कारणाद्यद्यनन्यत्वमतः कार्यमजं यदि । जाय-
मानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम् ॥ १२ ॥

र्थः । न हि सावयवं घटादि एकदेशस्फुटनधर्मि नित्यं दृष्टं लोक इत्य-
र्थः । विदीर्णं च स्यादेकदेशेनाजं नित्यं चेति । एतद्विप्रतिषिद्धं तैरभि-
धीयत इत्यभिप्रायः ॥ ११ ॥

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह । कारणादजात्कार्यस्य यद्यनन्य-
त्वमिष्टं त्वया ततः कार्यमजमिति प्राप्तम् । इदं चान्यद्विप्रतिषिद्धं कार्य-
मजं चेति तव । किंचाऽन्यत्कार्यकारणयोरनन्यत्वे जायमानाद्धि वै का-
र्यात्कारणमनन्यन्नित्यं ध्रुवं च ते कथं भवेत् । न हि कुक्कुट्या एकदेशः
पच्यते एकदेशः प्रसवाय कल्प्यते ॥ १२ ॥

त्वं साधयति । न हीति । सांख्यस्मृतिविरुद्धमनुमानमित्याशङ्क्याऽऽह । विदीर्णं-
चेति ॥ ११ ॥

किंच कार्यकारणयोरभेदे किं कारणाभिन्नं कार्यं किंवा कार्याभिन्नं कारणमिति विक-
ल्प्याऽऽद्यमनुवदति । कारणादिति । अतोऽस्मिन्पक्षे कार्यमजं स्यात् । तथाविधकार-
णाभिन्नत्वादिति दूषयति । अत इति । द्वितीयमनुद्रवति । यदीति । जायमानात्का-
र्यात्कारणमभिन्नं यदीति योजना । न तर्हि कारणं ध्रुवं भवितुमर्हति कार्याभिन्नत्वा-
त्तस्य चाध्रुवत्वादिति दूषयति । कारणमिति । श्लोकस्य तात्पर्यमाह । उक्तस्येति ।
कार्यकारणयोरभेदवादे विप्रतिषेधो दर्शितः । तस्यैव दृढीकरणार्थमयं श्लोक इत्यर्थः ।
पूर्वार्धोत्तरोत्थमर्थमाह । कारणादिति । प्राप्तेरनिष्टपर्यवसायित्वमाह इदं चेति । प्र-
धानस्याजत्वं जायमानत्वं च विप्रतिषिद्धमित्युक्तम् । ततोऽन्यदित्युक्तमेव व्यनक्ति । कार्य-
मिति । अभेदेऽपि मायावादे नैष दोषः कारणस्य कार्यादनन्यत्वानभ्युपगमात् ।
कार्यस्यैव कारणमात्रत्वाङ्गीकारादिति मत्वाऽऽह । तवेति । द्वितीयार्धं विभजते । किं-
चान्यदिति । अभेदवादेऽपि कार्यस्यानित्यत्वं कारणस्य नित्यत्वमिति व्यवस्था कि-
मिति न भवतीत्याशङ्क्याऽऽह । न हीति ॥ १२ ॥

१ छ. °दिरेक° । २ च. °देशे स्फु° । ३ ख. घ. ङ. ज. °त्यं च दृ° । ४ ख. °दीर्णे च । ५ ख. घ. ङ. कुक्कुट्यैक° । ६ च. छ. कल्पते । ७ छ. °नुवदति । ८ घ. °त्कार्यका° । ९ घ. °णका° । १० ख. °भेदेऽपि ।

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥
हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।

किंचाऽन्यदजादनुत्पन्नाद्वस्तुनो जायते यस्य वादिनः कार्यम् । दृष्टान्तस्तस्य नास्ति वै दृष्टान्ताभावेऽर्थादजान्न किंचिज्जायत इति सिद्धं भवतीत्यर्थः । यदा पुनर्जाताज्जायमानस्य वस्तुनोऽभ्युपगमः तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्यते । अनवस्थानं स्यादित्यर्थः ॥ १३ ॥

यत्र त्वस्य सर्वमात्मैवाऽभूदिति परमार्थतो द्वैताभावः श्रुत्योक्तस्तमाश्रित्याऽऽह । हेतोर्धर्माधर्मादेरादिः कारणं देहादिसंघातः फलं येषां वादिनाम् । तथाऽऽदिः कारणम् । हेतुर्धर्माधर्मादिः । फलस्य च देहादिसं-

किंच यस्य प्रधानवादिनो मते प्रधानादजादभिन्नं कार्यं जायते महदादीत्यभ्युपगम्यते । तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः तदवष्टम्भेनैव तेनार्थव्यवस्थापनात् । न चात्रोभयसंप्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीत्याह । अजादिति । यद्यजान्नित्याद्वस्तुनो जायमानमभ्युपगन्तुं न शक्यते तर्हि जातादेव जायमानमभ्युपगम्यतामित्याशङ्क्याऽऽह । जाताच्चेति । सांख्यसमये दोषान्तरप्रदर्शनपरत्वं श्लोकस्य प्रतिजानीते । किंचान्यदिति । तत्र पूर्वोक्ताक्षराणि योजयति । अजादिति । दृष्टान्ताभावेऽपि प्रमाणान्तरादर्थप्रतिपत्तिर्भविष्यतीत्याशङ्क्याऽऽह । दृष्टान्तेति । परस्य खल्वनुमानाधीनमर्थपरिज्ञानम् । न च दृष्टान्ताभावेऽनुमानमत्र कल्पते तस्मान्न सांख्यसमयः संभवतीत्यर्थः । द्वितीयार्धं व्याचष्टे । यदा पुनरित्यादिना ॥ १३ ॥

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन ख्यापितं वस्तुनोऽजन्यत्वमद्वैतवादिनाऽभ्यनुज्ञातमिदानीं द्वैतनिरसनमपि श्रौतं विद्वदनुभवानुसारित्वात्तेनाभ्यनुज्ञातमेवेत्याह । हेतोरिति । हेतुफलात्मकः संसारोऽनादिरिति वदद्भिस्तस्यानादित्वस्वभावो नैव वक्तुं शक्यते । हेतुफलयोरादिमत्त्वस्यैव कण्ठोक्तत्वादतो हेतुफलात्मकं द्वैतमनिरूपितरूपमवस्तुभूतमित्यर्थः । श्लोकस्य तात्पर्यमाह । यत्र त्विति । तमाश्रित्य कार्यकारणा-

छ. °जादुत्प° । २ झ. °भ्याभात्याद्व° । ३ झ. °ति प्रसि° । ४ झ. तदाप्य° । ५ छ. °श्रुत्युक्त° । ६ क. घ. ज. °र्मादे° । ७ झ. देहसं° । ८ घ. ङ. ज. फलमेषां । ९ क. झ. °र्मादिः । १० झ देहसं° । ११ ग. °न्तानुभा° । १२ ग. झ. °न्तानुमा° । १३ घ. ङ. ज. °कल्प्यते । १४ झ. ज. °रि च ते° । ग. °रिवादेना° क. °रिचनेना° । १५ ग. झ. °स्य त्वयैवोक्त° । १६ घ. °मनुम° । १७ छ. ज. °त्पर्यमा° ।

हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥१४॥
हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥१५॥
संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया । यु-
गपत्संभवे यस्मादसंबन्धो विषाणवत् ॥१६॥

---

घातस्य । एवं हेतुफलयोरितरेतरकार्यकारणत्वेनादिमत्त्वं ब्रुवद्भिरेवं हेतोः फलस्य चानादित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः । न हि नित्यस्य कूटस्थस्याऽऽत्मनो हेतुफलात्मता संभवति ॥ १४ ॥

कथं तैर्विरुद्धमभ्युपगम्यत इति । उच्यते । हेतुजन्यादेव फलाद्धे-तोर्जन्माभ्युपगच्छतां तेषामीदृशो विरोध उक्तो भवति यथा पुत्राज्ज-न्म पितुः ॥ १५ ॥

यथोक्तो विरोधो न युक्तोऽभ्युपगन्तुमिति चेन्मन्यसे संभवे हेतुफल-योरुत्पत्तौ क्रम एषितव्यस्त्वयाऽन्वेष्टव्यः । हेतुः पूर्वं पश्चात्फलं चेति ।

त्मकस्य द्वैतस्य दुर्निरूपत्वमाहेति योजना । हेतुफलयोरात्मपरिणामत्वादादिमत्त्वमुपा-दानरूपेण चानादित्वमित्याशङ्क्याऽऽत्मनो निरंशस्यं कूटस्थस्य नित्यस्य परिणामानु-पपत्तेर्नैवमित्याह । न हीति ॥ १४ ॥

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादित्वं विप्रतिषिद्धमि-त्युपपादितम् । संप्रति कार्यकारणभावोऽपि तयोर्न संभवतीत्याह । हेतोरित्यादिना । हेतुफलयोरन्योन्यं कारणत्वमभ्युपगच्छद्भिरभ्युपगम्यते विरुद्धमिति । एतत्प्रश्नपू-र्वकं प्रकटयति । कथमित्यादिना । ईदृशत्वमेव विशदयति । यथेति ॥ १५ ॥

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याऽऽह । संभवे इति । तयोरुदये प्रातीतिके नियतपूर्वभावी हेतुर्नियतोत्तरभावि फलमित्यभ्युप-गमे हेतुमाह । युगपदिति । यथोक्तो विरोधो हेतुफलभावस्यासंभवः स न युक्तोऽ-भ्युपगन्तुं प्रतीतिविरोधादिति व्यावर्त्यां शङ्कामनुवदति । यथेति । तत्रोत्तरत्वेन श्लोकाक्षराणि योजयति । संभव इति । प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह ।

---

१ क °तरका° । २ च. झ. °नादिः क° । ३ ख. घ. ङ. ज. °त्यकू° । ४ क. छ. °त्मरुता । ५ छ. °म्यते हे° । ६ झ. च्छतामी° । ७ झ. °गन्तुं चे° । ८ छ. °रूपितत्वमा° । ९ घ. °दिमत्त्व° । १० ग. झ. °स्य प° । ११ छ. °स्थनि° । १२ ख. ज. घ. ङ. °स्य स्वतः प° । १३ क. सन्युक्तो । १४ ग. छ. झ. °वर्त्यामाश° ।

फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति।
अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति॥ १७॥

इतश्च युगपत्संभवे यस्माद्धेतुफलयोः कार्यकारणत्वेनासंबन्धः। यथा युगपत्संभवतोः सव्येतरगोविषाणयोः॥ १६॥

कथमसंबन्ध इत्याह। जन्यात्स्वतोऽलब्धात्मकात्फलादुत्पद्यमानः सञ्शशविषाणादेरिवासतो न हेतुः प्रसिध्यति जन्म न लभते। अलब्धात्मकोऽप्रसिद्धः सञ्शशविषाणादिकल्पस्तव कथं फलमुत्पादयिष्यति। नहीतरेतरापेक्षसिद्धयोः शशविषाणकल्पयोः कार्यकारणभावेन संबन्धः क्वचिद्दृष्टः अन्यथा वेत्यभिप्रायः॥ १७॥

इतश्चेति। तामेवोपपत्तिं स्फोरयति। युगपदिति। ययोर्युगपत्संभवस्तयोर्न कार्यकारणत्वं यथा विषाणयोरिति व्याप्तेर्व्यक्तत्वात्क्रमस्यावश्यकतेत्यर्थः॥ १६॥

उक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति। फलादिति। हेतुफलयोर्मिथो हेतुफलत्वं ब्रुवतो मते हेत्वधीनतयाऽलब्धात्मकात्फलादुत्पद्यमानो हेतुर्न ततो लब्धात्मको भवत्यलब्धात्मकश्चाऽसत्त्वान्न फलमुत्पादयितुं शक्नोति। अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः। हेतुफलयोरक्रमवतोर्न कार्यकारणभावेन संबन्धः सिध्यतीत्येतदाकाङ्क्षापूर्वकं साधयति। कथमित्यादिना। स्वतो हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं स्वतश्चालब्धात्मकम्। तत उत्पद्यमानः सन्नेष हेतुर्न प्रसिध्यति। न खलु शशविषाणादेरसतः सकाशात्किंचिल्लब्धात्मकमुपलभ्यते। हेतुश्चेदप्रसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि यथाविधोऽसद्रूपः सन्न फलमुत्पादयितुमुत्सहते। न हि सद्वादिमते फलमसतः सकाशादुपलब्धचरमित्यर्थः। तथाऽपि कथं हेतुफलयोरसंबन्धः सिध्यतीत्याशङ्क्याऽऽह। न हीति। अन्यथा वेत्याधाराधेयभावादिकथनं हेतुफलयोर्युगपद्ये सत्यन्यतरस्यापि न पूर्वक्षणे सत्चेत्यसतोः शशविशाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते शशविषाणादिष्वपि प्रसंगादित्युक्तम्॥ १७॥

---

१ घ. °तो हे°। २ क. °तुः सि°। घ. °तुः फलं प्र°। ३ ष. °को सि°। ४ ष. °दिविक°। ५ ङ. °था चेत्य°। ६ क. घ. ज. °न्य हे°। ७ ख. °ह। अ°। ८ ग. ङ. °पेतामा°। ९ ग. ङ. सत्वमित°।

यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ।
कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥
अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः । ए-
वं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥

---

असंबन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया कतरत्पूर्वनिष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात्पूर्वसिद्ध्यपेक्षया तद्ब्रूहीत्यर्थः ॥ १८ ॥

अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिरपरिज्ञानम् । तत्त्वाविवेको मूढतेत्यर्थः । अथ वा योऽयं त्वयोक्तः क्रमः हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्यलक्षणस्तस्य कोपो विपर्यासोऽन्यथाभावः स्यादित्यभिप्रायः । एवं हेतुफलयोः कार्यकारणभावानुपपत्तेरजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिताऽन्योन्यपक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः ॥ १९ ॥

इदानीं पुण्यो वै पुण्येन कर्मणा भवतीत्यादिश्रुतेर्धर्मादिषु हेतुफलभावमाशङ्क्य श्रुतेरसंभावितार्थे प्रामाण्यायोगादवश्यं पौर्वापर्यं वक्तव्यमित्याह । यदीति । श्लोकाक्षराणि योजयति । असंबन्धेत्यादिना ॥ १८ ॥

हेतुफलयोरिदं पूर्वमिदं पश्चादिति न ज्ञायते । परस्पराश्रयात् । अतश्चेदं पूर्वनिष्पन्नमिति वक्तुमशक्यमित्याह । अशक्तिरिति । उत्तरावसरे चेदुत्तरापरिज्ञानं तर्हि कथमशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानीयमापततीत्यर्थः । किंच यदि क्रमस्य नियतपूर्वापरभावात्मनोऽपरिज्ञानं तदा पूर्वं कारणमुत्तरं कार्यमिति प्रतिज्ञा[11] हीयेत । तथा च प्रतिज्ञाहानिर्निग्रहान्तरमापद्येतेत्याह । क्रमेति । अन्योन्यपक्षप्रतिक्षेपमुखेन[12] सतोऽसतश्च जन्मनी प्रत्याख्याते । क्रमाक्रमाभ्यामुत्पत्तेरनुपपत्तेरजातिरेवास्मदभिप्रेता[13][14] वादिभिरादर्शिता भवतीत्युपसंहरति । एवं हीति[15] । तत्राऽऽद्यं पादं व्याकरोति । अथेत्यादिना । क्रमपक्षे पूर्वनिष्पन्नमेतच्छब्देन परामृश्यते । द्वितीयपादं योजयति । अथवेत्यादिना । द्वितीयार्धं विवृणोति । एवमिति ॥ १९ ॥

---

१ च. झ. 'लाभि'। २ झ. संबद्धता'। ३ घ. 'दोषे मयोदि'। ४ च 'नापादि'। ५ ख. च. 'लयं नि'। ६ घ. ज. 'न्यम इय'। ७ क. छ. 'न्योन्यापेक्ष'। ८ ख. ङ. झ. पूर्वं नि'। ९ ग. ङ. झ. चेत्तदु'। १० ग. झ. 'परीभा'। ११ घ. ज. हीयते। १२ ग. 'तिपक्षमु'। १३ छ 'नुत्पत्तेरतोजा'। १४ ग. झ. 'रतो आ'। १५ ग. झ. 'वं तर्हीति।

बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः ।
न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥ २० ॥

ननु हेतुफलयोः कार्यकारणभाव इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य छलमिदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा विषाणवच्चासंबन्ध इत्यादि । न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिरसिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता । किं तर्हि । बीजाङ्कुरवत्कार्यकारणभावोऽभ्युपगम्यत इति । अत्रोच्यते । बीजाङ्कुराख्यो दृष्टान्तो यः स साध्येन तुल्यो ममेत्यभिप्रायः । ननु प्रत्यक्षः कार्यकारणभावो बीजाङ्कुरयोरनादिर्न पूर्वस्य पूर्वस्याऽपरवदादिमत्त्वाऽभ्युपगमात् । यथेदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान्बीजं चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत् । एवं पूर्वःपूर्वोऽङ्कुरो बीजं च पूर्वं पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्यादिमत्त्वात्कस्यचिदप्यनादित्वानुपपत्तिः । एवं हेतुफलानाम् । अथ

बीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्यकारणभावाभ्युपगमान्नान्योन्याश्रयत्वमित्याशङ्क्याऽऽह । बीजेति । दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्त्वित्याशङ्क्याऽऽह । न हीति । श्लोकापोद्यं चोद्यमुद्भावयति नन्विति । शब्दमात्रं विवक्षितार्थशून्यम् । शब्दमाश्रित्य छलप्रयोगमेवोदाहरति । पुत्रादिति । आदिशब्देन फलादुत्पन्नः सन् ते हेतुः प्रसिध्यतीत्यादि गृह्यते । कार्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेतमर्थं कथयति । न हीति । तत्रैव प्रश्नपूर्वकमभिप्रेतमर्थमुदाहरति । किं तर्हीति । दृष्टान्तासंप्रतिपत्त्या परिहरति । अत्रेति । मायावादिमते क्वचिदपि कार्यकारणभावस्य वस्तुभूतस्यासंप्रतिपत्तेर्ममेत्युक्तम् । प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते । नन्विति किं बीजाङ्कुरव्यक्त्योरिदं कार्यकारणत्वमिष्यते किंवा बीजाङ्कुरसंतानयोरिति विकल्प्याऽऽद्यं दूषयति । न पूर्वस्येति । तदेव प्रपञ्चयति । यथेत्यादिना । बीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादित्वस्याऽन्योन्यकारणत्वस्य चानुपपत्तिरिति शेषः । कल्पान्तरमुत्थापयति । अथेति । बीजसंततेरङ्कुरसंततेश्चानादित्वमन्योन्यकारणत्वं चाविरुद्धं सिध्यति । बीजजातीयादङ्कुरजातीयस्याङ्कुरजातीयाद्बीजजातीयस्योत्पत्तेः । मुख-

१ च. नः । २ क. °रणभा° । ३ च साध्यसमः सा° । ४ ङ. °न समतुल्यो । ५ च °त्यक्षा° । ६ च. घ. °दि. नापू° । ७ च. °स्यादि° । ८ क. °त्वादि° । ९ क. ङ. पूर्वे पू° । १० च. पूर्वोङ्कु° । ११ च. ङ. °तस्य चादि° । १२ ङ. °दिमत्त्वा° । १३ छ °क° । १४ ङ. °पोद्यं चो° । १५ ग. °नः हे° । १६ ग. ङ. तत्रैवं । १७ ग. ङ. °पत्तिर्म° । १८ घ. किं बी° । १९ ङ. °त्वस्यापनु° । २० ङ. छ. °षः । विक° । २१ ग. ङ. °दिमत्° । २२ ङ. ङ. °न्यकार्यत्वं° । २३ ग. ङ. °त्वं चा वि° । २४ ग. ङ. °यमु° ।

पूर्वापरापरिज्ञानमजातेः परिदीपकम् । जाय-
मानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥ २१ ॥

---

बीजाङ्कुरसंततेरनादिमत्त्वमिति चेत् । न एकत्वानुपपत्तेः न हि बीजा-
ङ्कुरव्यतिरेकेण बीजाङ्कुरसंततिर्नामैकाऽभ्युपगम्यते हेतुफलसंततिर्वा
तदनादित्ववादिभिः । तस्मात्सूक्तं हेतोः । फलस्य चानादिः कथं तैरु-
पवर्ण्यत इति । तथा चान्यदप्यनुपपत्तेर्न छलमित्यभिप्रायः । न च लोके
साध्यसमो हेतुः साध्यसिद्धौ सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्य-
र्थः । हेतुरिति दृष्टान्तोऽत्राभिप्रेतो गमकत्वात् । प्रकृतो हि दृष्टान्तो न
हेतुरिति ॥ २० ॥

कथं बुद्धैरजातिः परिदीपितेत्याह । यदेतद्धेतुफलयोः पूर्वापरापरि-

---

लभ्यते । तथैव हेतुजातीयात्फलजातीयं फलजातीयाच्च हेतुजातीयमविरुद्धमित्यर्थः ।
दृष्टान्ते दार्ष्टान्तिके च संततेरेकस्या व्यक्तेर्व्यतिरेकेणासंभवान्नैवमिति दूषयति । ने-
त्यादिना । तदेव प्रपञ्चयति । न हीति । तदनादित्ववादिभिस्तासु व्यक्तिषु मिथो
हेतुत्वमनादित्वं तद्दर्शनशीलैरिति यावत् । अन्योन्याश्रयत्वादनवस्थानाद्वा हेतुफल-
योर्मिथो हेतुफलभावस्य वक्तुमशक्यत्वाद्दृष्टान्तदार्ष्टान्तिकयोरनुपपत्तिः सिद्धेत्युपसं-
हरति । तस्मादिति । दृष्टान्तस्यासंप्रतिपन्नत्वे स्थिते कार्यकारणस्य क्वचिदपि सं
प्रतिपत्त्यभावात्पुत्राज्जन्म पितुर्यथेत्यादि न छलप्रयुक्तमिति फलितमाह । तथा चेति ।
एवं श्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे । न चेति । किमिति हेतुशब्दस्य
मुख्यमर्थं त्यक्त्वा गौणोऽर्थो गृह्यते । प्रकरणसामर्थ्यादित्याह । प्रकृतो हीति । हेतु-
फलभावानुपपत्तिमुपपादितामुपसंहर्तुमितिशब्दः ॥ २० ॥

यत्पुनरन्योन्यपक्षं प्रतिक्षिपद्भिरजातिर्वस्तुतो ज्ञापिता परीक्षकैरित्युपक्षिप्तं तत्र कथ-
मजातिर्वस्तुतो ज्ञापितेत्याशङ्क्याऽऽह । पूर्वापरेति । कार्यस्य गृह्यमाणत्वादजातिरसि-
द्धेत्याशङ्क्य कारणस्यापि तर्हि ग्राह्यत्वादितरेतराश्रयादजातिरतिव्यक्ता सिध्यतीत्या-
ह । जायमानादिति । तत्र पूर्वार्धं प्रश्नद्वारा विवृणोति । कथमित्यादिना । नियते
पौर्वापर्ये निर्धारिते जातिः सिध्यति । तदभावे तदसिद्धिरित्यर्थः । द्वितीयार्धं विभज-

---

१ घ. °पस्य° । २ ख. घ. ङ. ज. °द्धि चेद्धर्मा° । ३ छ. वै कार्यात्क° । ४ °रसंमति° । ५ च. झ. °स्मा सुक्तं । ६ च. च सा° । ७ च. हेतोरि° । ८ घ. °ति च द° । ९ झ. बुधै र° । १० ख °के° । ११ ग. ज. झ. °व्यक्तिव्यति° । १२ घ. ङ. °त्तेर्व्यक्तिव्यति । १३ क. °दनुसी° । १४ क. ख. छ. °फलत्व । १५ छ. मुख्यार्थे । १६ अ. °ते क° । १७ ख. घ. ङ. ज. °रभिव्य° । १८ ग. °यत्पौ° । १९ ग. ङ. °ध्यतीति त° । २० ग. ङ. °वेन त° ।

स्वतो वा परतो वापि न किंचिद्वस्तु जायते।

ज्ञानं तच्चैतदजातेः परिदीपकमवबोधकमित्यर्थः। जायमानो हि च धर्मो गृह्यते। कथं तस्मात्पूर्वं कारणं न गृह्यते। अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम्। जन्यजनकयोः संबन्धस्यानपेतत्वात्। तस्मादजातिपरिदीपकं तदित्यर्थः॥ २१॥

इतश्च न जायते किंचित्। यज्जायमानं वस्तु स्वतः परत उभयतो वा सदसत्सदसद्वा न जायते न तस्य केनचिदपि प्रकारेण जन्म संभवति। न तावत्स्वयमेवाऽपरिनिष्पन्नात्स्वतः स्वरूपात्स्वयमेव जायते यथा घटस्तस्मादेव घटात्। नापि परतोऽन्यस्मादन्यो यथा घटात्पटः पटात्पटान्तरम्। तथा नोभयतः। विरोधात्। यथा घटपटाभ्यां

ते। जायमानो हीति। कार्यग्रहणे कारणं गृहीतव्यमिति कुतो नियम्यते तत्राऽऽह। अवश्यं हीति। कार्यकारणयोर्नियतसंबन्धवतोरितरेतराश्रयाद्दुर्ग्रहत्वादजातिरेव वस्तुतो ज्ञापितेत्युपसंहरति। तस्मादिति। कार्यकारणयोर्दुर्ज्ञानत्वं तच्छब्देन परामृश्यते॥ २१॥

वस्तुनो वस्तुतो जन्म नास्तीति विकल्पपूर्वकं साधयति। स्वतो वेत्यादिना। कस्य चिदपि वस्तुनो जन्म नास्तीत्यस्मिन्नर्थे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति। इतश्चेति। इतःशब्दार्थमेव स्फोरयितुं जायमानमनूद्य षोढा विकल्पयति। यज्जायमानमिति। सर्वेष्वपि पक्षेषु दोषसंभावनां सूचयति। न तस्येति। तत्राऽऽद्यं दूषयति। न तावदिति। स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते स्वयमेव स्वापेक्षामन्तरेण स्वकारणाधीनतया परिनिष्पन्नत्वात्। अन्यथा स्वसिद्धेः स्वसिद्धिरित्यात्माश्रयात्। न हि घटादेव घटो जायमानो दृष्टोऽस्तीत्यर्थः। द्वितीयं प्रत्याह। नापीति। न खल्वन्यत्वं जनकत्वे प्रयोजकम्। घटादपि पटोत्पत्तिप्रसंगात्। न चोत्पादकत्वयोग्यत्वविशेषितमन्यत्वं तथेति वाच्यम्। उत्पत्तिमन्तरेण तद्योग्यत्वस्य दुरवगमत्वादित्यर्थः तृतीयं निरस्यति। तथेति। विरोधमेव दृष्टान्तद्वारा स्पष्टयति। यथेति। नहि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते। तथा जायमानं स्वस्मादन्यस्माच्च भवतीत्यनुपपन्नमित्यर्थः। अन्यत्वे सत्यपि जन्यजनकभावस्य

१ छ. °दीपिकं। २ ख. घ. च. ङ. ज. हि चेद्धर्मो। झ. हि वै ध°। ३ घ. यतो यज्जा°। ४ झ. °ष्पन्नस्मात्स्वतः स्व° ५ क. छ. °त्स्वरू°। ६ ग. झ. °णदृष्टा°। ७ झ. °च्छलेन। ८ ग. झ. °स्तुतोऽव°। ९ क. ख. झ. °नोवस्तुतो ज°। १० क. ज. °पि घटो°। ११ °पत्तिरित्य°।

सदसत्सदसद्वाऽपि न किंचिद्वस्तु जायते ॥ २२ ॥

---

घटः पटो वा न जायते । ननु मृदो घटो जायते पितुश्च पुत्रः । सत्यम् । अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम् । तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते किं सत्यमेव तावुत मृषेति यावता परीक्ष्यमाणे । शब्दप्रत्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत् । वाचारम्भणमिति श्रुतेः । सच्चेन्न जायते सत्त्वात्मृत्पिण्डादिवत् । यद्यसत्तथाऽपि न जायतेऽसत्त्वादेव शशविषाणादिवत् । अथ सदसत्तथाऽपि न जायते विरुद्धस्यैकस्यासंभवात् । अतो न किंचिद्वस्तु जायत इति सिद्धम् । येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः । ते दूरत एव न्यायापेताः । इदमित्थमित्यवधारणक्षणान्तरानवस्थानादननुभूतस्य स्मृत्यनुपपत्तेश्च ॥ २२ ॥

प्रत्यक्षत्वान्नासौ शक्यते प्रतिक्षेप्तुमिति शङ्कते । नन्विति । किं प्रत्यक्षानुसारिणौ शब्दप्रत्ययावविवेकिनामिष्येते किंवा विवेकिनामिति विकल्प्याऽऽद्यमङ्गीकरोति । सत्यमिति । द्वितीयं प्रत्याह । तावेवेति । मृषैवेति परीक्ष्यमाणे सतीति संबन्धः । तच्च जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव । वाचारम्भणश्रवणान्न परमार्थतो यावता विद्यते । तस्मादसत्यालम्बनत्वमेव शब्दप्रत्यययोरेष्टव्यमिति योजना । चतुर्थं शिथिलयति । सच्चेदिति । पञ्चमं निराकरोति । यदीति । षष्ठं प्रत्यादिशति । अथेत्यादिना । षण्णां विकल्पानां निरासे फलितं निगमयति । अतो नेति । क्रियाकारकफलनानात्वपक्षे जन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति । येषां पुनरिति । बौद्धानां न्यायावष्टम्भेन वस्तु व्यवस्थापयतां कुतो न्यायबाह्यत्वमित्याशङ्क्याऽऽह । इदमिति । इदमा वस्तु परामृष्टम् । इत्थमिति क्षणिकत्वं विवक्षितम् । एवमवधारणावच्छिन्ने क्षणे वस्त्ववच्छेदकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावेन न तस्मिन्ननुभवः सिध्यतीत्यर्थः । न च तस्मिन्ननुभूतेऽर्थे स्मृतिरुत्पद्यते । तथा च वस्तुनि प्रत्ययद्वयासिद्धौ व्यवहारासिद्धिरित्याह । अननुभूतस्येति ॥ २२ ॥

१ क. च. छ. वा जा॰। २ ज ॰टो पि॰। ३ घ. ॰माणं श॰। ४ क. ख. घ. ज॰ ॰त्पिण्डादि॰। ५ क. ख. छ. ॰ते विद्यते ऽसि॰। ६ क. छ. ञ. ॰षाणव॰। ७ च. ॰पि जा॰। ८ च. ॰स्तुतस्ते दू॰। ९ ख. ॰मित्य॰। १० घ. ॰रणा॰। ११ ज. ॰णलक्ष॰। १२ ज. छ. ज. ञ. ॰मिध्यते। १३ ग. ञ. तत्र। १४ ञ विकाराणां १५ ञ ॰नां फ॰। १६ घ. क. ज. ॰तं ग॰। १७ ख. ॰क्षे अज॰। छ. ॰क्षेऽजस्य। ञ॰। १८ ग. ञ. ॰पत्ति दो॰। १९ ग. ॰वमेव। २० छ. ॰वाभ्रानु॰। २१ क. छ. घ ज. ॰न्न॰।

**हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः ।**
**आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥२३॥**

किंच हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरजन्मैवाभ्युपगतं स्यात्कथमनादेरादिरहितात्फलाद्धेतुर्न जायते । न ह्यनुत्पन्नादनादेः फलाद्धेतोर्जन्मेष्यते त्वया फलं च । आदिरहितादनादेर्हेतोरजात्स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते । तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते । यस्मादादिः कारणं न विद्यते यस्य लोके तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते । कारणवत एव ह्यादिरभ्युपगम्यते नाकारणवतः ॥ २३ ॥

---

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह । **हेतुर्नेति** । नानादेः फलाद्धेतुर्जायते । न हि फलस्यानादित्वे सतो हेतुजन्म युक्तं सदा तज्जन्मप्रसंगादित्यर्थः । फलमपि न हेतोरनादेर्जायते दोषसाम्यादित्याह । **फलं चेति** । नापि स्वभावतो निमित्तमन्तरेण फलं हेतुर्वा जायते । तत्र हेतुमाह । **आदिरिति** । कारणरहितस्य जन्मानुपलब्धेरित्यर्थः । वस्तुनो वस्तुतो जन्माभावे हेत्वन्तरपरत्वं श्लोकस्य सूचयति । **किंचेति** । हेत्वन्तरमेव दर्शयितुं प्रथमं प्रतिज्ञां करोति । **हेत्विति** । फलाद्धेतुर्जायते ततश्च फलमित्यभ्युपगमात्कथमजन्माभ्युपगतमिति पृच्छति । **कथमिति** । तत्राऽऽद्यपादाक्षरयोजनया परिहरति । **अनादेरिति** । तदेवोपपादयति । **न हीति** । फलं कार्यकारणसंघातः । हेतुर्धर्मादिः । फलं चापीतिभागं विभजते । **फलं चेति** । अजाज्जायत इति नाभ्युपगम्यत इति संबन्धः । स्वभावत इतिपदं योजयति । **स्वभावत एवेति** । फलितं निगमयति । **तस्मादिति** । न हेतुफलयोर्जन्मवतोरनादित्वमभ्युपगन्तुं शक्यम् । अभ्युपगमे च जन्मैव तयोराकस्मिकं स्यादित्यर्थः । स्वभाववादनिराकरणं प्रतिज्ञातमुत्तरार्धावष्टम्भेन प्रतिपादयति । **यस्मादिति** ॥ २३ ॥

१ च. वाऽपि । २ झ. °दिमत्व° । ३ झ. °दजादना° । ४ झ. तस्यादिः । ५ ग. झ. °न्तरं सू° ।
६ ङ. झ. °र्यंकार° । ७ ङ. ज. झ. °मे त्वज° । ८ क. ग झ. °वादिनि° ।

**प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः । संक्लेशस्योपलब्धेश्च परतन्त्राऽस्तिता मता ॥ २४ ॥**

---

उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति । प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम् । निमित्तं[1][2] कारणं विषय इत्येतत्सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत्प्रतिजानीमहे । न हि निर्विषया[3] प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात् । तस्याः सनिमित्तत्वात् । अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतः नाशोऽभावः प्रसज्येतेत्यर्थः । न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात् । अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात् । परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं तस्य परतन्त्रस्य परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता मताऽभिप्रेता । न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण

---

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तम् । इदानीं बाह्यार्थवादमुत्थापयति । प्रज्ञप्तेरिति । ज्ञानस्य[4] निर्विषयत्वे प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति । अन्यथेति । अग्निदाहादिप्रयुक्तदुःखोपलब्ध्यनुपपत्तेश्चास्ति बाह्योऽर्थ इत्याह । संक्लेशस्येति । परतन्त्रं परकीयं[13] शास्त्रं तस्यास्तिता तद्विषयस्य बाह्यार्थस्य विद्यमानतेति यावत् । श्लोकस्य तात्पर्यमाह । उक्तस्यैवेति । वस्तुनो नास्ति वस्तुतो जन्मेत्युक्तार्थस्तस्यैव दृढीकरणं पूर्वोत्तरपक्षाभ्यां चिकीर्ष्यते तया पुनराक्षेपमुखेन बाह्यार्थवादिनां प्रस्थानमुत्थापयतीत्यर्थः । ब्रह्मस्वरूपभूतां प्रज्ञप्तिं प्रतिषेधति । शब्दादीति[15] । साकारवादं व्युदस्यति । स्वात्मेति । प्रज्ञप्तेर्विषयनिरपेक्षत्वान्न स्वातिरिक्तविषयतेत्याशङ्क्याऽऽह । न हीति । सनिमित्तत्वं सविषयत्वेन स्फुरणम् । तमेव हेतुं द्वितीपादयोजनया विशदयति । अन्यथेति । प्रसंगस्येष्टत्वं प्रत्याचष्टे । न चेति । प्रत्ययवैचित्र्यानुपपत्तिप्रयुक्तं फलं चतुर्थपादव्याख्यानेन कथयति । अत इति । ननु प्रज्ञप्तेः स्वभावभेदेनैव बाह्यालम्बनं[16] वैचित्र्यमन्तरेण स्वगतं वैचित्र्यं घटिष्यते तत्राऽऽह । न हीति । औपाधिकं तर्हि प्रत्ययवैचित्र्यमित्याशङ्क्य बाह्यार्थातिरिक्तोपाध्यनधिगमान्मैवमित्याह ।

---

१ घ. °मित्तका° । २ क. °त्तं कर° । ३ क. तस्य नि° । ४ च. °षयं तदेत° । ५ च. झ. °प्तिः स्यात्त° । ६ क. °त्यद्द° । ७ झ. °न्यथाशा° । ८ क. °तन्त्रा° । ९ झ. °प्तेः स्वप्र° । १० ग. °तस्यासविष° । ११ ख. ङ. °स्य सविष° । १२ ग. झ. °ह्यार्थधीरित्या° । १३ ख. °कीयशा° । १४ घ. °ह्मरू° । १५ ग. ज. झ. °ति । स्वाका° । १६ क. छ. °म्बनवै° ।

प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात्। नि-
मित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्॥ २५॥

स्वभावभेदेनैव वैचित्र्यं संभवति। स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः। इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता। संक्लेशनं संक्लेशो दुःखमित्यर्थः। उपलभ्यते ह्यग्निदाहादिनिमित्तं दुःखं यद्यग्न्यादिबाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात्ततो दाहादिदुःखं नोपलभ्येत। उपलभ्यते तु अतस्तेन मन्यामहे अस्ति बाह्योऽर्थ इति। न हि विज्ञानमात्रे संक्लेशो युक्तः। अन्यत्रादर्शनादित्यभिप्रायः॥ २४॥

अत्रोच्यते। बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र ब्रूहि किं तत इति। उच्यते। निमित्तस्य प्रज्ञप्त्या-

स्फटिकस्येति। तृतीयपादं हेत्वन्तरपरत्वेनावतारयति। इतश्चेति। तस्योपलब्धिमुपपादयति। उपलभ्यते हीति। तदुपलम्भेऽपि कुतो बाह्यार्थसिद्धिरित्याशङ्क्याऽऽह। यदीति। उपलब्धिरेव तर्हि दुःखस्य माभूदिति चेन्न। स्वानुभवविरोधादित्याह। उपलभ्यते त्विति। विशिष्टदुःखोपलब्ध्यनुपपत्तिसिद्धं फलमाह। अत इति। विज्ञानातिरिक्तबाह्यार्थाभावेऽपि क्लेशोपलब्धिरविरुद्धेत्याशङ्क्याऽऽह। न हीति। अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत्॥ २४॥

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादमुद्भावयति। प्रज्ञप्तेरिति। अस्तु का नाम वस्तुक्षतिरित्याशङ्क्याऽऽह। निमित्तस्येति। मतान्तरे प्राप्ते तन्निराकरणमुच्यते। विज्ञानवादिनेति। श्लोकस्य तात्पर्यमाह। अत्रेति। तत्र पूर्वार्धं विभजते। बाढमित्यादिना। द्वैतिनस्तव तर्कप्रधानत्वान्न प्रतीतिमात्रशरणता युक्तेति मत्वाऽऽह। स्थिरीभवेति। वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना। विचारदृष्टिमेवावष्टभ्याऽऽह तर्हि किं ततो दूषणं ब्रूहीति पृच्छति। ब्रूहीति। तत्रोत्तरार्धं सिद्धान्ती व्याकुर्वन्नुत्तरमाह। उच्यत इत्यादिना। घटादेर्वैचित्र्योहेतुत्वे प्रश्नपूर्वकं हेतुमाह।

१ च. झ. 'नैतद्वैचि'। २ छ. नीलपीताद्यु'। ३ च. 'चित्र्यमित्य'। ४ च. 'र्थस्या'। ५ च. 'बाह्या'। ६ क. दारादि'। ७ झ. 'मित्तवि'। ८ ज. 'लभ्यते। ९ च. युक्तिर्दर्श'। १० झ. 'ति। अत्रो-च्य'। ११ क. 'ह्नताल'। १२ क. कता। १३ छ. 'वसिद्धत्वमि'। १४ ग. 'लब्ध्यानु'। १५ ग. छ. झ. बाह्यार्थ'। १६ च. 'युक्तं यु'। १७ ग. झ. 'र्थे स्थि'। १८ ज. 'ति। त'। १९ क. 'त्र्यहेतु'।

लम्बनाधिमित्तस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्व-मिष्यतेऽस्माभिः कथं भूतदर्शनात्परमार्थदर्शनादित्येतत् । न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति । यथाऽश्वान्महिषः पटो वा तन्तुव्यतिरेकेण । तन्तवश्चांशुव्यतिरेकेणेत्येवमुत्तरोत्तरभूत-दर्शन आशब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामह इत्यर्थः । अथवा भूतदर्शनाद्बाह्यार्थस्यानिमित्तत्वमिष्यते । रज्ज्वादाविव सर्पादेरित्यर्थः । भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं भवेत् । तदभावेऽभावा-त् । न हि सुषुप्तसमाहितमुक्तानां भ्रान्तिदर्शनाभावे आत्मव्यतिरि-क्तो बाह्योऽर्थ उपलभ्यते । न ह्युन्मत्तावगतं वस्त्वनुन्मत्तैरपि तथा भूतं गम्यते । एतेन द्वयदर्शनं संक्लेशोपलब्धिश्च प्रत्युक्ता ॥ २५ ॥

कथमित्यादिना । परमार्थदर्शनं प्रपञ्चयति । न हीति । तत्र वैधर्म्यदृष्टान्तमाह । यथेति । घटे दर्शितं न्यायं पटेऽपि दर्शयति । पटो वेति । तन्तुष्वपि न्यायसाम्यमुदाह-रति । तन्तव इति । परमार्थदर्शनफलमुपसंहरति । इत्येवमिति । घटादीनां स्वकारण-व्यतिरेकेणासत्तां न प्रत्ययवैचित्र्यहेतुत्वमतो घटादिप्रत्ययवत्प्रत्ययान्तराण्यपि प्रत्यय-त्वाविशेषाद्वास्तवालम्बनवर्जितानि मन्तव्यानीत्यर्थः । भूतदर्शनं यौक्तिकं तत्त्वदर्शनं ततो निमित्तस्यानिमित्तत्वमिति व्याख्यातम् । इदानीमभूतदर्शनादिति पदच्छेदेन व्याख्याना-न्तरमाह । अथ वेति । यथा रज्ज्वादावधिष्ठाने सर्पादेरारोपितस्य दर्शनान्न तस्य वस्तुतो दर्शनं प्रत्यालम्बनत्वमिष्टम् । तथैवाधिष्ठानज्ञानापेक्षया परमार्थतो दर्शनाद्बाह्यस्यार्थस्य ज्ञानं प्रत्यालम्बनत्वं वास्तवमभ्युपगन्तुमशक्यमित्यर्थः । किंच । विमतो बाह्यार्थो न त-त्त्वतो ज्ञानं प्रत्यालम्बनं भ्रान्तिविषयत्वाद्रज्ज्वां सर्पादिवदित्याह । भ्रान्तीति । हेतुं सा-धयति । तदभाव इति । भ्रान्त्यभावे बाह्यार्थो न भातीत्युक्तं हेतुं प्रपञ्चयति । न हीति । देहाभिमानवतो बाह्यार्थप्रतिभानध्रौव्याद्द्वैतदर्शिनोऽपि तत्प्रतिभानमप्रत्यूहं प्राप्नोतीत्या-शङ्क्याऽऽह । न ह्युन्मत्तेति । बाह्यार्थसमर्थनेनार्थमुक्तमर्थापत्तिद्वयं कथं निरसनीयमित्याह । एतेनेति । तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धि-श्च प्रत्युक्ता । तेनानुपपद्यमानार्थापत्तिद्वयस्यानुत्थानम् । व्यवहारदृष्ट्या तु पूर्वभ्रमसमा-रोपितैस्तत्प्रवदैर्वैः संवेदने वैचित्र्यं दुःखं च व्यवहाराङ्गमित्यन्यथाप्युपपत्तिरित्यर्थः ॥ २५ ॥

१ झ. °केणेति । त° । २ ख. च. ङ. छ. °न्तवो वांशु° । ३ च. °दर्शने श° । ४ छ. आदिश° । ५ क. °भानात् । ६ ट. बाह्यार्थं । ७ च. °गतव° । ८ क. °नुत्पत्तेर° । ९ झ. °र्शनमं° । १० च. °ब्धि-श्चेत्यु° । ११ क. छ. प्रयुक्ता । १२ घ. ज. °दर्शितन्या° । १३ ग. झ पटे द° । १४ ग झ. °सामान्यमु° । १५ ख. °ति । एव । १६ छ. प्रत्ययाल° । १७ छ. °द्वाह्यार्थं° । १८ छ. प्रत्ययाल° । १९ ज. °ति । दे° । २० क. घ. ज. °नार्थमर्था° । २१ ग. छ. ज. °त्याशङ्क्याऽऽह । २२ ग. छ. झ. पूर्वभ्रान्तिस° । २३ ख. ग. ङ. झ. °पितं त्त° । २४ ख. ङ. ज. °व वै° । २५ ख. °चित्र्ये दुः° ।

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च । अ-**
**भूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥**
**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु । अ-**
**निमित्तो विपर्यासः कथं तस्य भविष्यति ॥२७॥**

---

यस्मानास्ति बाह्यं निमित्तं अतश्चित्तं न स्पृशत्यर्थं[1] बाह्यालम्बनविषयम् । नाप्यर्थाभासं[2] चित्तत्वात्स्वप्नचित्तवत् । अभूतो हि जागरिते[3]ऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वाच्च । नाप्यर्थाभासश्चित्तात्पृथक्चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥ २६ ॥

ननु विपर्यासस्तर्ह्यसति घटादौ[4] घटाद्याभासता चित्तस्य । तथा च

ज्ञानस्य सालम्बनत्वप्रसिद्धेस्तत्त्वदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याऽऽह । **चित्तमिति** । न हि स्फुरणं[5] सकर्मकं[6] तस्य सकर्मकत्वप्रसिद्ध्यभावात् । ज्ञातेस्तु सकर्मकत्वं[7] क्रियाफलत्व[8]कल्पनया स्वीकृतमिति भावः । चित्तस्यार्थस्पर्शित्वाभावे[9]ऽपि[10] तदाभासस्पर्शित्वं स्यादित्याशङ्क्याऽऽह । **नार्थेति** । तत्र हेतुमाह । **अभूत इति**[12] । प्रथमपादं व्याचष्टे । **यस्मादिति** । विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात्संप्रतिपन्नवदिति द्वितीयं पादं विभजते । **नापीति** । न हि दृष्टान्ते[13] तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः । तृतीयं[14]पादं व्याकरोति । **अभूतो हीति** । विमतोऽर्थः सन्न भवत्यर्थत्वात् । संप्रतिपन्नवदित्यनुमानान्न ज्ञानस्यालम्बनमित्यर्थः[15] । विमतोऽर्थः स्वविषये[16]ज्ञानजनको न भवति भ्रान्तिविषयत्वात्संप्रतिपन्नवदित्युक्तमनुमानं स्मारयति । **उक्तेति** । अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह । **नापीति** ॥ २६ ॥

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत् । भ्रान्तिश्चाभ्रान्तिप्रतियोगिनीत्यन्यथाख्यातिमतशङ्क्याऽऽह । **निमित्तमिति** । कालत्रये[17]ऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्भासनाभावात्तज्जन्या नान्यथा ख्यातिः सिध्यति । भ्रान्तिस्तु विपान्तरेणापि भविष्यतीत्याह । **अनिमित्त इति** । श्लोकव्यावर्त्यामाशङ्कां दर्शयति । **नन्विति** । यदि घटादि[18]र्बाह्यो[19]ऽर्थो न गृह्यते तर्हि तस्मिन्नसत्येव[20] तदाभासताज्ञानस्य[21]

---

१ च. °स्तथा पृ° । २ ख. घ. च. ज. न सस्पृ° । ङ. च. न सस्पर्शत्य° । ३ ज. °ते हि स्व° । ४ घ. ङ ज. घटे घ° । ५ झ. स्मरणं । ६ ज. °सक° । ७ झ. सर्वकर्मकत्वाक्रि° । ८ झ. °लक° । ९ ङ. ज °शितत्वा° । १० घ. ङ. ज. °वे त° । ११ घ. ङ. ज. °शितत्वं । १२ ख झ. °भूतो हीति । १३ घ. ङ. ज. °न्तेऽस्या° । १४ झ. °तीयं व्या° । १५ घ. °र्थः वि° । १६ ग. °यये ज्ञा° । १७ घ. ङ. ज. °ये विज्ञा° । १८ ख. °दिर्बाह्यो । १९ घ. ङ ज. °बाह्यार्थो । २० क. °सत्वेव । २१ क. सत्वाज्ज्ञान° ।

**तस्मान्न जायते चित्तं चित्तदृश्यं न जायते। तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥ २८ ॥**

---

सत्यविपर्यासः कचिद्वक्तव्य इति। अत्रोच्यते। निमित्तं विषयमतीतानागतवर्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेवं हि। यदि हि कचित्संस्पृशेत्सोऽविपर्यासः परमार्थत इति। अतस्तदपेक्षयाऽसति घटे घटाद्याभासता विपर्यासः स्यान्न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम्। तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति न कथंचिद्विपर्यासोऽस्तीत्यभिप्रायः। अयमेव हि स्वभावश्चित्तस्य। यं॰ दुतासति निमित्ते घटादौ तद्वदवभासनम् ॥ २७ ॥

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदितम्। तदेव हेतुं कृत्वा तत्पक्ष-

---

विपर्यासः। अतस्मिंस्तद्बुद्धेस्तथात्वात्। विपर्यासे च स्वीकृते कचिदप्यविपर्यासो वक्तव्यः। भ्रान्तेरभ्रान्तिपूर्वकत्वस्यान्यथाख्यातिवादिभिरिष्टत्वादित्यर्थः। तत्र पूर्वार्धयोजनया परिहरति। अत्रेति। उक्तमेवार्थमुत्तरार्धयोजनया साधयति। यदीति। अभ्रान्तेरभावादसंभवे भ्रान्तेरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निर्वहतीत्याशङ्क्याऽऽह। अयमेवेति। स्वभावशब्देनाविद्योच्यते। न हि भ्रान्तिरभ्रान्तिपूर्विकेति नियमः। सविषयाणां प्रमाणामविद्यात्वाभ्युपगमादित्यर्थः ॥ २७ ॥

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति। तस्मादिति। प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याऽऽह। तस्येति। वृत्तसंकीर्तनपूर्वकं श्लोकस्य तात्पर्यमाह। प्रज्ञप्तेरिति। तत्र बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेन प्रवृत्तं तत्पुनराचार्येण भवत्वेवमित्यनुज्ञातम्। बाह्यार्थवाददूषणस्य स्वमतेऽपि संमतत्वादित्याह। बाह्यार्थ इति। बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह। तदेवेति। असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनु-

---

१ च. न संस्पृ॰। २ ज. ॰शेत्सो॰। ३ ख. घ. ङ. ॰व य॰। च. ॰व चित्तं य॰। ४ क. छ. झ. ॰टाभा॰। ५ च. झ. ॰र्थस्य सं॰। ६ च. य अप्रे स॰। ७ घ. ङ. ज. ॰दवि॰। ८ क. ग. ज. झ. ॰जनार्थे सा॰। ९ ग. छ. झ. ॰कता॰। १० ग. ॰नो वि॰। ११ छ. बाह्यार्थो वि॰। झ. बाह्यार्थवि॰। १२ क. छ. ॰णेनाप्र॰। १३ ग. घ. ङ. ज. ॰वत्येव॰। १४ क. छ. झ. ॰त्यभ्यनु॰। १५ ॰सत्त्वं वि॰।

प्रतिषेधाय तदिदमुच्यते तस्मादित्यादि । यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् । तस्मात्तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम् । यथा चित्तदृश्यं न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखित्वशून्यत्वानात्मत्वादि च । तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम् । अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः । येऽपि शून्यवादिनः पश्यन्त एव सर्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनाऽपि जिघृक्षन्ति ॥ २८ ॥

मोदितमित्यर्थः । संप्रति विज्ञानवाददूषणमवतारयति । तदिदमिति । तस्मादित्यादि व्याचष्टे । यस्मादिति । भूतदर्शनाद्घटादेर्मृदादिमात्रं भूतं वस्तुतत्त्वं तस्यापि विज्ञप्तिमात्रं तत्त्वं तस्य शास्त्रतो दर्शनादिति यावत् । द्वितीयपादं दृष्टान्तत्वेन विभजते । यथेति । विमतं विज्ञानजन्म न तात्त्विकं दृश्यत्वान्नीलपीतादिवदित्यर्थः। विपक्षे दोषमाह । अत इति । तत्त्वतो विज्ञानस्य जन्मायोगाद्ये तस्य तात्त्विकं जन्म पश्यन्ति ते पक्ष्यादीनां खेऽपि पदं पश्यन्तीत्यन्वयः । अनात्मत्वादीत्यादिशब्देनान्योन्यविलक्षणत्वमन्योन्यसादृश्यं च गृह्यते । तत्र हेतुं सूचयति । तेनैवेति । स्ववृत्तेरनुपपत्तेस्तद्दृश्यतामन्तरेण च तद्धर्मदृश्यतासंभवादित्यर्थः । विज्ञानवादे फलितं विशेषं दर्शयति । अत इति । शून्यवादिनं प्रति विशेषं कथयति । येऽपीति । पश्यन्त एवेत्यविलुप्तदृग्रूपता द्योत्यते । दृग्बलादेव सर्वाभावः सिध्यति । दृगभावस्तु कथं सिध्येत् । न च तावद्दृगेव तदभावं साधयेत् । तयोरेककालत्वानुपपत्तेरित्यर्थः । किंच सर्वशून्यतां वदन्तः शून्यतादर्शनस्यैव स्वात्मदर्शनस्य च शून्यतां वदन्ति । तथा च स्वपक्षासिद्धिरित्यभिप्रेत्याऽऽह । स्वदर्शनस्येति । ततोऽपीति विज्ञानवादिभ्योऽपीत्यर्थः ॥ २८ ॥

च °षेधयाते । अतस्तादि° । २ च. °दि तस्मादसत्ये । ३ क. °स्य ह्याय° । ४ घ. चित्तं वि° । घ. चित्तं तथा । ५ घ. °था दृ° । ६ ङ. ज. °चित्तं दृ° । ७ च. °ते यत° । ८ छ. °त्वशू° । ९ ग. झ. °दुःखत्व° । १० घ. ङ. ज. °तरू° । ११ झ. °श्यन्तोऽतः खे । १२ छ. °नन्ति ते । १३ ख. खे प° ।१४ क. छ. दृग्भावस्तु । १५ घ. ङ. ज. °स्य शू° ।

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः ।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥२९॥**
**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति । अ-**
**नन्तता चादिमतो मोक्षस्य न भविष्यति॥३०॥**

उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धं यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः । अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथंचिद्भविष्यति ॥ २९ ॥

अयंचापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते । अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति । न ह्यनादिः सन्नन्तवान्कश्चित्पदार्थो दृष्टो

यदि विज्ञानस्य बाह्यालम्बनत्वं क्षणिकत्वं शून्यत्वं च न संभवति किं तर्हि तत्त्वमेकंरूपं भवतीत्याशङ्क्याऽऽह । **अजातमिति** । तस्याश्च प्रकृतेरन्यथात्वं पुरस्तादेव निरस्तमित्याह । **प्रकृतेरिति** । श्लोकस्य तात्पर्यमाह । **उक्तैरिति** । कूटस्थमद्वितीयं ब्रह्मेति यत्पूर्वत्र प्रतिज्ञातं तज्जन्मनो दुर्निरूपत्वादुक्तहेतुभिः सिद्धम् । तस्यैव सिद्धस्यार्थस्य फलमुपसंहर्तुमेष श्लोक इत्यर्थः । पूर्वार्धं योजयति । **अजातमिति** । यदि चित्तं स्फुरणमजातमभीष्टं तर्हि तद्ब्रह्मैव तस्य कौटस्थैकस्वाभाव्यात्तत्पुनर्वस्तुतो न जातमेव मायया जन्मवदिति कल्प्यते चित्तस्याजातिरेवाजातत्वात्प्रकृतिर्भवतीत्यर्थः । द्वितीयार्धं योजयति । **अजातरूपाया इति** । तस्याश्चेदन्यथात्वं स्वरूपहानिरापतेदित्यर्थः ॥ २९ ॥

कूटस्थं तत्त्वं तात्त्विकमित्यत्र हेत्वन्तरमाह । **अनादेरिति** । विमतः संसारो नान्तवाननादिभावत्वादात्मवदित्यर्थः । किंच मोक्षोऽनन्तो न भावत्वे सत्यादिमत्त्वाद्घटवदित्याह । **अनन्तेति** । श्लोकस्य तात्पर्यमाह । **अयं चेति** । तत्र पूर्वार्धं व्याकरोति । **अनादेरिति** । अतीतकोटिरहितस्य पूर्वं नासीदित्यवच्छेदवर्जितस्येत्यर्थः । योऽनादिर्भावः सोऽन्तवान्नेति व्याप्तिरात्मनि व्यक्तेत्याह । **न हीति** । बीजाङ्कुरयोर्हेतुफलभावेन संबन्धस्तस्य नैरन्तर्यं सन्तानस्तस्यानादिभावत्वेऽपि विच्छेदस्यान्तस्य

१ च. °ता आदि° । २ झ °ते य° । ३ च. °तिम्नतस्त° । ४ ङ. छ. °स्य चित्तस्य त° ।५ च. °ति । तर्ह्यना° । ६ घ. ङ. ज. °श्चित्सत्प° । ग. झ. °नत्वादस्य । ८ ग. झ. त्वं श° । ९ ग. झ. °कत्वरूपं च सं भ° । १० ग. झ. तत्तज° । ११ ग. झ. °मपीष्टं । १२ ग. घ. ङ. ज. °टस्थैक° । १३ घ. °व्यात्पु° । १४ ख. घ. ङ. ज. °तामितिमा° । १५ छ. जायमानत्वा° । १६ ग. झ. न भविष्यत्या° । ख. छ. न भवति भा° । १७ घ. ङ. ज °ववत्त्वे । १८ ग. छ. ज. °दृघटादिव° । १९ ख °दिर्भावः । २० ग. झ. °न्तर्यस° ।

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा। वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते। तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

---

लोके। बीजाङ्कुरसंबन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत्। न। एकवेरत्वभावेनापोदितत्वात्। तथाऽनन्ततापि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्यादिमतो न भविष्यति। घटादिष्वदर्शनात्। घटादिविनाशवेदवस्तुत्वाददोष इति चेत्। तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः। असत्त्वादेव शशविषाणस्येवादिमत्त्वाभावश्च ॥ ३० ॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥ ३१ ॥ ३२ ॥

---

दृष्टत्वादनैकान्तिकतेति शङ्कते। बीजेति। भावत्वविशेष्यांशस्य तत्रावर्तनान्न व्यभिचारशङ्केति दूषयति। नैकेति। द्वितीयार्धं व्याचष्टे। तथेति। यत्राऽऽदिमत्त्वं तत्र नानन्तत्वमिति व्याप्तिभूमिमाह। घटादिष्विति। यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसोऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते। घटादीति। मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्येतेति दूषयति। तथा चेति। किंच प्रागसतः सत्तासमवायरूपं कार्यत्वं तदपि मोक्षस्यासत्त्वे न सिध्यतीत्याह। असत्त्वादेवेति ॥३०॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राऽऽह। आदाविति। यदित्यूषरोदकादि गृह्यते तथा वस्तुतो नास्त्येवेति यावत्। वितथैस्तैरेव मरीच्युदकादिभिः सादृश्यमाद्यन्तवत्त्वम्। विमता मोक्षादयो न परमार्थसन्तो भवितुमर्हन्त्याद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः। कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याऽऽह। अवितथा इति। लक्षिता मूढैरविचारकैरिति शेषः। ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनां तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भान्न मोक्षादिवैतथ्यमित्याशङ्क्याऽऽह। सप्रयोजनतेति। तेषां मोक्षादीनामिति यावत्। पुनरुक्तिशङ्कां वारयति। वैतथ्य इति ॥ ३१ ॥ ३२ ॥

१ च. ज. झ. 'बन्धे नै'। २ च. 'स्वभावेनाप दि'। ३ च. झ. 'पि ज्ञा'। ४ ख. ध. ङ. ञ. 'प्रभव'। ५ ञ. भवति। ६ ज. 'वस्तु'। छ. 'वद्वस्तु'। ७ च. च स्थाने मो'। ८ च. 'द्विभावयन्तावाभावश्च। अवितथा एव भावाः सप्रयोजनत्वादित्यत आह। आदावन्तेति ॥३१॥ सप्रयोजनता तेषां विप्रेयति। सप्रयोजनतेति। वै'। ९ छ. 'शेषाश'। १० घ. 'दसा'। ११ घ. ङ. 'रूपकां'। १२ ङ. ञ. 'दिवृष'। १३ घ ङ. ज 'वत्त्वेन वि'। १४ घ 'ति दि'। १५ झ 'ति निराशङ्काम्'दिति।

**सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् । संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥३३॥**

**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ । प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ ३४ ॥**

**मित्राद्यैः सह संमन्त्र्य संबुद्धो न प्रपद्यते ।**

---

निमित्तस्यानिर्मित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः ॥ ३३ ॥ जागरिते गत्यागमनकालो नियतो देशः प्रमाणतो यस्तस्यानियमान्नियमस्याभावात्स्वप्ने न देशान्तरगमनमित्यर्थः ॥ ३४ ॥ मित्राद्यैः सह संमन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते ।

---

किंच येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाऽऽह । सर्वेति । यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्वस्य जागरितस्य दर्शनान्मिथ्यात्वं दुर्वारमित्यर्थः । किंच योग्यदेशवैधुर्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते ब्रह्मण्यखण्डैकरसे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्याद्ब्रह्मणोऽनवकाशत्वादित्याह । संवृत इति । अवतारितश्लोकसहितानामुत्तरश्लोकानां जात्याभासमित्यस्मात्प्राक्तनानां तात्पर्यमाह । निमित्तस्येति ॥ ३३ ॥

उक्तमेवार्थं प्रपञ्चयति । न युक्तमित्यादिना । स्वप्ने देशान्तरगतौ नियतकालाभावान्न गत्वा दर्शनमिष्टं तथा मरणादूर्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः किंच यद्देशस्थः स्वप्नं पश्यति प्रतिबुद्धस्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम् । तथा यस्मिन्देशे स्थितः संसारमनुभवति ब्रह्मभावं प्रतिपन्नस्तस्मिन्देहदेशे नास्ति परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह । प्रतिबुद्धश्चेति । श्लोकस्य तात्पर्यार्थं कथयति । जागरित इति ॥ ३४ ॥

किंच यथा स्वप्ने विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति स ब्रह्मवादिभिः सह समालोच्याविद्यानिद्रातः प्रतिबुद्धो नैव श्रेयःसाध्यत्वमालोचितं प्रतिपद्यते । सर्वस्य नित्यमुक्तत्वनिश्चयात् । अतो मुमुक्षुत्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्याह । मित्राद्यैरिति । किंच स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति तत्साध्य-

---

१ ख. घ. च. ज. °न्त्र्य प्रबु° । २ क. छ. °कालौ नियतौ दे° । ३ झ. °णं न° । ४ ख. घ. ङ. ज. प्रतिप° । ५ ज. झ. °न्तर्दर्श° । ६ ख. प्रत्य° । ७ घ. नं कु° । ८ छ °ना । किंच स्व° । ९ कं. °वाच्च ग° । १० ख. प्रबु° । ११ ख. °त्वमिष्टं तथा । १२ क. ज. यथा । १३ ज. °नुवदति । १४ ख. नास्तीति प° । १५ छ. °त्वमिष्टमि° । १६ ग. झ. °त्पर्यक° । १७ झ. विद्यानि° । १८ ग. झ. °तः सकाशात्प्रति° । १९ ग झ °साधनत्व° । २० छ. °ध्यमा° ।

ननु न श्रुतं त्वया आकाशवत्सर्वसंघातेष्वेक एवात्मेति। यदि एक एवाऽऽत्मा तर्हि सर्वत्र सुखी दुःखी च स्यात्। न चेदं सांख्यचोद्यं संभवति। न हि सांख्य आत्मनः सुखदुःखादिमत्त्वमिच्छति बुद्धिसमवायाभ्युपगमात्सुखदुःखादीनाम्। न चोपलब्धिस्वरूपस्याऽऽत्मनो भेदकल्पनायां प्रमाणमस्ति। भेदाभावे प्रधानस्य पारार्थ्यानुपपत्तिरिति चेत्। न। प्रधानकृतस्यार्थस्याऽऽत्मन्यसमवायात्। यदि हि प्रधानकृतो बन्धो मोक्षो वाऽर्थः पुरुषेषु भेदेन समवैति ततः प्रधानस्य पारार्थ्यमात्मैकत्वे नोपपद्यत इति युक्ता पुरुषभेदकल्पना। न च सांख्यैर्बन्धो मोक्षो वाऽर्थः पुरुषसमवेतोऽभ्युपगम्यते। निर्विशेषाश्च चेतनमात्रा आत्मानोऽभ्युपगम्यन्ते। अतः पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पारार्थ्यं सिद्धं न तु पुरुषभेदप्रयुक्तमिति। अतः पुरुषभेदकल्पनायां न प्रधानस्य पारार्थ्यं हेतुः। न चान्यत्पुरुषभेदकल्पनायां प्रमाणमस्ति सांख्यानाम्। परसत्तामात्रमेव चैतन्निमित्तीकृत्य स्वयं बध्यते मुच्यते

कथमङ्गीकृतमित्याशङ्क्याऽऽह। ननु नेति। यदि सर्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्यैवैकस्य प्राप्तमिति व्यवस्थाऽसिद्धिरिति चोदयति। यद्येक एवेति। आत्मस्वरूपस्य सर्वत्रैकत्वेऽपि कल्पितभेदाद्व्यवस्थासिद्धिरित्यभिप्रेत्य किमिदं सांख्यस्य चोद्यं किंवा वैशेषिकादेरिति विकल्प्याऽऽद्यं प्रत्याह। न चेदमिति। किंचैकात्म्यं दूषयता सांख्येन तद्भेदोऽभ्युपगम्यते। स च नाभ्युपगन्तुं शक्यते तन्मानाभावादित्याह। न चेति। प्रधानं हि कस्यचिद्भोगमपवर्गं च कस्यचिदादधत्पुरुषविशेषमिष्यते। तच्च पुरुषभेदाभावे नोपपद्यते। तेनार्थापत्त्या पुरुषभेदः सिध्यतीति शङ्कते। भेदेति। अर्थापत्तेरनुदयं वदन्नुत्तरमाह। नेत्यादिना। संक्षिप्तमेवोक्तं विवृणोति। यदि हीति। प्रधानस्य पारार्थ्यसामर्थ्यादेव पुरुषेषु कश्चिदतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह। निर्विशेषा इति। किंच प्रधानस्य पारार्थ्यं परं शेषिणमपेक्षते। न तस्मिन्भेदमपि काङ्क्षते। अतोऽन्यथाऽप्युपपत्तिरित्याह। अत इति। जन्ममरणादिव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं व्यधिकरणत्वादिति मत्वाऽऽह। न चेति। न केवलं प्रमाणशून्या पुरुषभेदकल्पना किंतु प्रयोजनशून्या चेत्याह। परेति। ननु न पुरुषसत्तामात्रं निमित्तीकृत्य प्रधानं प्रव-

---

१ ख. °त्सर्वेषु सं°। २ घ. भ्र. °त्सुखा°। ३ ख. छ. °पमात्रस्या°। ४ ड. छ. °बन्धमो°। ५ क. घ. छ. ज. आत्मनां°। ६ क. °गा प्र°। ७ च. °वचेन्निमि°। ८ ख. °तन्यात्मे°। ९ क. तस्य चैक°। १० ख. °ति न व्यवस्थासि°। झ. °ति नव्य। ११ घ. ज. °भेदव्यव°। १२ ग. झ. °ख्यचो°। १३ घ. ज. झ. तत्र माना°। १४ छ. °षविशे°। १५ ग. °ते। स च पु°। १६ ग. झ. °दादेवोप°। १७ क घ. ड. ज. °पे क°। १८ क. °रणःपृ°। १९ घ. °नं न°।

उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् । न च
भूतादभूतस्य संभवोऽस्ति कथंचन ॥ ३८ ॥

---

हकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्य स स्वप्नस्तद्धेतुर्जागरित-कार्यमिष्यते । तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम् । यथा स्वप्न इत्यभिप्रायः । यथा स्वप्नः स्वप्नदृश एवं सन्साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारण-विद्यमानवस्तुवदवभासमानं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्य-भिप्रायः ॥ ३७ ॥

ननु स्वप्नकारणत्वेऽपि जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्त-चलो हि स्वप्नो जागरितं तु स्थिरं लक्ष्यते । सत्यमेवमविवेकिनां स्यात् । विवेकिनां तु न कस्यचिद्वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पाद-स्यात्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति । यदपि मन्यसे जागरितात्सतोऽसत्स्वप्नो जायत इति तदसत् । न भूता-द्विद्यमानादभूतस्यासतः संभवोऽस्ति लोके । न ह्यसतः शशविषाणादेः संभवो दृष्टः कथंचिदपि ॥ ३८ ॥

रितवदिति । उत्तरार्धं योजयति । तद्धेतुत्वादिति । सति प्रमातरि बाध्यत्वं स्वप्नस्य मिथ्यात्वं जागरितस्य पुनस्तदनुपलम्भात्परमार्थतः सत्त्वम् । कार्यस्य मि-थ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात् । न हि सर्वसाधारणं विद्यमानं च जागरितं मिथ्या भवितुं युक्तमित्याशङ्क्याऽऽह । यथेत्यादिना ॥ ३७ ॥

कार्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैषम्यादित्याश-ङ्क्याऽऽह । उत्पादस्येति । यत्तु कार्यकारणत्वं सत्यासत्ययोरिव स्वप्नजागरितयो-रित्युक्तं तद्दुरुक्तमित्याह । न चेति । श्लोकव्यावर्त्यामाशङ्कामाह । नन्विति । कि-मिदं वैलक्षण्यमविवेकिनां प्रतिभाति किंवा विवेकिनामिति विकल्याऽऽद्यमङ्गीकरोति । सत्यमिति । द्वितीयं प्रत्याह । विवेकिनां त्विति । द्वितीयभागमाकाङ्क्षाद्वारा विभज-ते । यदपीत्यादिना । संभवो नासतोऽस्तीत्येतद्दृष्टान्तेन साधयति । न हीति । कथं-चिदपि सतोऽसतो वेत्यर्थः ॥ ३८ ॥

---

१ ख. स्वप्नस्त जा° । २ घ. ङ. ज. °स्य जाग° । ३ क. °प्रस्त° । ४ घ. ङ. ज. स च स्व° । ५ ज. °प्नसद° । ६ च. स्वप्नद° । ७ च. झ. °व सत्साधा° । ८ च. °नं तु । ९ ख. छ. ज. स्वप्नं प्रति का° । १० क. घ. °स्वे जा° । ११ क. °मेवावि° । १२ ग. यद्यपि । १३ ग. झ. °प्रमि । १४ ख. घ. °स्तदुप° । १५ झ. °रणभा° । १६ झ. °रणं स्व° । १७ क. ख. °यारेव । ग. °योः स्व° । १८ ख. तदयुक्त° ।

